# अच्युताष्टकम्

अथ श्री अच्युताष्टकम्

अच्युतं केशवं रामनारायणं
कृष्णदामोदरं वासुदेवं हरिं
श्रीधरं माधवं गोपिकावल्लभं
जानकीनायकं रामचन्द्रं भजे  १

अच्युतं केशवं सत्यभामाधवं
माधवं श्रीधरं राधिकाराधितम्
इन्दिरा मन्दिरं चेतसा सुन्दरं
देवकीनन्दनं नन्दनं संदधे  २

विष्णवे जिष्णवे शङ्खिने चक्रिणे
रुक्मिनी रागिने जानकी जानये
वल्लवी वल्लभायाऽर्चितायात्मने
कंस विध्वंसिने वंशिने ते नमः  ३

कृष्ण गोविन्द हे राम नारायण
श्रीपते वासुदेवाजित श्रीनिधे
अच्युतानन्त हे माधवाधोक्षज
द्वारका नायक द्रौपदी रक्षक  ४

राक्षसक्षोभितः सीतयाशोभितो
दण्डकारण्य भू पुण्यता कारणः
लक्ष्मणेनान्वितो वानरैः सेवितो
अगस्त्यसंपूजितो राघवः पातु माम्  ५

धेनुकारिष्टकोऽनिष्टकृद्द्वेषिणां
केशिहा कंसहृद्वंशिकावादकः
पूतनाकोपकः सूरजा खेलनो
बाल गोपालकः पातु मां सर्वदा ६

विद्युदुद्द्योतवान् प्रस्फुरद्वाससं
प्रावृडम्भोदवत्प्रोल्लसद्विग्रहम्
वन्यया मालया शोभितोरस्थलं
लोहितांघ्रिद्वयं वारिजाक्षं भजे ७

कुञ्चितैः कुन्तलैर्भ्राजमानाननं
रत्नमौलिं लसत्कुण्डलं गण्डयोः
हारकेयूरकं कङ्कण प्रोज्ज्वलं
किङ्किणी मञ्जुलं श्यामलं तं भजे ८

अच्युतस्याष्टकं यः पठेदिष्टदं
प्रेमतः प्रत्यहं पूरुषः सस्पृहम्
वृत्ततः सुन्दरं कर्तृविश्वम्भरं
तस्य वः शो हरिर्जायते सत्वरम् ९

ॐ

Reference:
Narayana Rama Acharya, ed., *Brihat-Stotra-Ratnakarah*, Part I, (Varanasi: Chaukhambha Orientalia, 1997), p. 74.